जातरजोऽङ्गनायाम् । नवरजः स्त्रियाम् ॥

नववधूः । स्त्री । नूतनपरिणीतायाम् । नवोढायाम् । नयी बहू इतिभाषा ॥

नववध्वागमनम् । न । नूतनपरिणीतायाः प्रथमतः क्रियमाणे भर्तृगृहागमने । गौनाइतिभाषा ॥

नवमः । त्रि । नवानाम् पूरणे ॥ तस्य पूरणेडट् ॥ ङीपि नवमी ॥

नवमल्लिका । स्त्री । नवमालिकायाम् । नेयालि इति नेओयार इतिच गौड भाषा प्रसिद्धे पुष्पे ॥

नवमल्ली । स्त्री । नवमालिकायाम् ॥ नवा स्तुत्या मल्ली ॥

नवमालिका । स्त्री । नवमल्लिकायाम् । ग्रीष्मोद्भवायाम् । सप्तलायाम् । नेवारा इति नेवारी इतिच भाषा ॥ नवा स्तुत्या मालिका ॥

नवमी । स्त्री । शुक्लकृष्णपक्षयोस्तिथिविशेषे । इयं चन्द्रस्य नवमकला क्रियारूपा दुर्गाया स्तिथिः ॥ अस्यांजातस्यफलम् । विरोधकर्त्तासुजने रगम्यः परापकारार्थमतिः कुशीलः । आचारहीनः कृपणः कठोरः प्रसूतिकाले नवमी यदि स्यादिति ॥

नवयौवना । स्त्री । युवतौ । तरुण्याम् । दिक्कर्याम् । अतिक्रान्तमुग्धभावाया



म् ॥ नवंयौवनंतारुण्यंयस्याः सा ॥

नवरत्नम् । न । नवप्रकारमणिषु ॥ यथा । मुक्तामाणिक्यवैदूर्यगोमेदान् वज्रविद्रुमौ । पद्मरागं मरकतं नीलञ्चेति यथा क्रमादिति तन्त्रसारः ॥ नवानांरत्नानां समाहारः ॥ * ॥ नवग्रहदोषशान्त्यैधार्याणि नवरत्नानि यथा । वैदूर्यं धारयेत्सूर्ये नीलञ्च मृगलाञ्छने । आवनेयेपिमाणिक्यं पद्मरागं शशाङ्कजे ॥ गुरौमुक्तां भृगौवज्रं शनौनीलं विदुर्बुधाः । राहौ गोमेदकं धार्यं केतौ मरकतं तथेतिदीपिका ॥

नवरात्रम् । न । आश्विनादुक्तमासेषु शुक्लप्रतिपदादिनवमीपर्यन्तनवदिनकर्त्तव्ये दुर्गाव्रतविशेषे ॥ नवरात्र चतुष्टयमुक्तं देवीभागवते । चैत्रेऽश्विनेतथाषाढे माघेकार्यांमहोत्सवः । नवरात्रे महाराजपूजाकार्या विशेषत इति ॥ नवानांरात्रीणां समाहारः ॥

नवरात्रिकम् । न । नवरात्रे ॥

नववरिका । स्त्री । नवोढायाम् ॥

नववल्लभम् । न । दाहागुरुणि ॥ त्रि । नवीनप्रिये ॥

नववस्त्रम् । न । नवाम्बरे । अनाहते ॥

नवशायकः । पुं । नवशाक इति गौड

भाषाप्रसिद्धे नवविधे गोपादिजातिविशेषे ॥ यथा । गोपो मालीतथातैली तन्त्री मोदकवारजी । कुलालः कर्मकारश्च नापितो नवशायकाः ॥ इतिपराशरसंहिता ॥

नवश्राद्धम् । न । एकादशाहादिश्राद्धे ॥

नवसारः । पुं । न । नवसादरे ॥ तच्छुद्धिर्यथा । नवसारो भवेच्छुद्धश्चूर्णतोयेविपाचितः। दोलायंचेण यत्नेन भिषग्भिर्योगसिद्धये इतिसारचन्द्रिका ॥

नवसादरम् । न । नौसादर इतिभाषाप्रसिद्धे द्रव्ये ॥ प्रतिश्यायेषु शिरसः पीडासु नवसादरम् ॥

नवसूतिका । स्त्री । अचिरप्रसूतायां धेनौ ॥ नवंसूतं प्रसवोऽस्याः। शेषादितिकप् । प्रत्ययस्थादितीत्त्वम् ॥

नवा । स्त्री । नवीनायाम् ॥

नवांशः । पुं । नवमांशे । मेषादिद्वादशलग्नानां नवमे भागे ॥ यथा । मेषाद्या मकराद्याश्च तुलाद्याः कर्कटादयः। क्रमान्नवांशा राशीनां स्वांशावर्गास्तमाः स्मृताः॥ यथा। मेषे प्रथमनवांशेकांशोमेषस्य । द्वितीयांशोवृषस्य। तृतीयांशोमिथुनस्य। चतुर्थांशः कर्कटस्य । पञ्चमांशः सिंहस्य । षष्ठांशः कन्यायाः। सप्तमांशस्तुलायाः। अष्टमांशो वृश्चिकस्य । नवमांशोधनुषः ॥ * ॥ एवं वृषे प्रथमांशो मकरस्य । २ कुम्भस्य । ३ मीनस्य । ४ मेषस्य । ५ वृषस्य । ६ मिथुनस्य । ७ कर्कस्य । ८ सिंहस्य । ९ कन्यायाः ॥ * ॥ तथा मिथुने १ तुलायाः । २ वृश्चिकस्य । ३ धनुषः । ४ मकरस्य । ५ कुम्भस्य । ६ मीनस्य । ७ मेषस्य । ८ वृषस्य । ९ मिथुनस्य ॥ * ॥ एवं कर्के १ कर्कस्य । २ सिंहस्य । ३ कन्यायाः । ४ तुलायाः । ५ वृश्चिकस्य । ६ धनुषः । ७ मकरस्य । ८ कुम्भस्य । ९ मीनस्य ॥ एवं सिंहे मेषाद्याः ॥ कन्यायां मकराद्याः ॥ तुलायां तुलाद्याः ॥ वृश्चिके कर्कटाद्याः ॥ एवमेव धनुषिमेषाद्याः ॥ मकरे मकराद्याः॥ कुम्भेतुलाद्याः ॥ मीने कर्काद्याः क्रमान्नवांशाश्चेयाः॥ उक्तञ्च । मेषे नवांशा मेषाद्याः वृषेच मकरादिकाः। मिथुनेच तुलाद्याः स्युः कर्कटे कर्कटादिका इति ॥

नवांशकः । पुं । नवांशे ॥

नवाङ्गम् । न । पाचनविशेषे ॥ यथा। विश्वामृताब्दभूनिम्बैः पञ्चमूलीसमन्वितैः। कृतः कषायोहन्त्याशुवातपित्तोद्भवं ज्वरम् ॥

नवाङ्गा । स्त्री । कर्कटशृङ्ग्याम् ॥

नवान्नम् । न । नवीनान्ने ॥ तन्निमि

स्याहे ॥

नवाप्रसूता । स्त्री । नूतनायां चीरवि दार्व्याम् ॥

नवाभोगः । त्रि । अभिनवप्रयत्ने । महोत्साहे ॥ नवआभोगोयत्नोयस्य ॥

नवाम्बरम् । न । अनाहते । नवीन वस्त्रे ॥ नवञ्चतदम्बरञ्च ॥

नवार्चिः । पुं । मङ्गलग्रहे ॥ इति त्रिका ण्डशेषः ॥

नवाली । स्त्री । नवमालिकायाम् ॥

नवाहः । पुं । न । नवतिथौ । नवदिने ॥ प्रतिपत्तिथौ ॥

नवीनः । त्रि । नव्ये । नूतने ॥ नव एव । नवस्यनूप्तनप्खाश्चप्रत्यया: दूरादेशश्च ॥

नवीयस् । त्रि । नवतरे ॥

नवेदस् । पुं । अज्ञे ॥ नवेत्ति । विद०। असुन् ॥

नवोढा । स्त्री । नववध्वाम् । जन्याम् । नववरिकायाम् ॥ मुग्धानायिका भेदे ॥ यथा । वक्त्रान्नीतापार्श्वं मुखमनुमुखं नैवकुरुते धुनानामूर्द्धानं क्षिपति वदनं चुम्बनविधौ। हृदि न्यस्तं हस्तं क्षिपति गमनारोपितमना नवोढा वोढारं रमयतिच सन्ता पयतिचेतिरसमञ्जरी ॥ नवानूतना चासौ ऊढाविवाहिताचेतिविग्रहः॥

नवोद्धृतम् । न । नवनीते ॥ नवञ्चत त् उद्धृतञ्च । विशेषणसमास: ॥

नव्यः । त्रि । नवीने । नूतने ॥ नूयते । णुस्तुतौ । अचोयत् ॥ पुं । रक्तपुनर्नवायाम् ॥

नश् । न । नशने ॥ नश० । भावेक्विप् । नश्यति कर्त्तरिवाक्विप् । पचादयः यथा विधिकर्त्तव्याः ॥

नशाकः । पुं । काकविशेषे ॥

नशिता । त्रि । नाशाश्रये ॥ नशेस्तृन् ॥

नश्यत्प्रसूतिका । स्त्री । मृतवत्सायाम् । मृतपुत्रिकायाम् ॥

नश्वरः । त्रि । अशाश्वते । नाशप्रतियोगिनि ॥ नश्यति तच्छीलः । नश० । इण्नशजिसर्त्तिभ्यः क्वरप् ॥ टिड्ढेति ङीपि । नश्वरी ॥

नष्टः । त्रि । तिरोहिते । अदर्शन विशिष्टे ॥ नाशाश्रये ॥ नश्यतिस्म । णश अदर्शने । गत्यर्थेति कर्त्तरि क्तः ॥ भावक्तान्तादर्शआद्यच्चा ॥

नष्टचन्द्रः । पुं । सौरभाद्रस्योभयपक्षे चतुर्थ्यामुदितेचन्द्रे ॥ यथा । नष्टश्चन्द्रो न द्रष्टव्यो भाद्रेमासि सितासिते । चतुर्थ्यामुदितो ऽशुद्धः प्रतिषिद्धोमनीषिभिः ॥ चन्द्रस्तारापहरणं कलङ्क मतिदुष्करम् । तस्मै द

दाति हेनन्द कामतो यदि पश्यति ॥ अकामतो नरो दृष्ट्वा मन्त्रपूतं जलं पिबेत् । तदा शुद्धो भवेत् सद्यो निष्कलङ्की महीतले ॥ सिंहः प्रसेनमवधीत् सिंहो जाम्बवताहतः । सुकुमारक मारोदी स्तव ह्येष स्यमन्तकः ॥ इति मन्त्रेणपूतञ्च जलंसाधुःपिबेद्ध्रुवम् ॥ इति ब्रह्मवैवर्त्तपुराणम् ॥

नष्टचेष्टता । स्त्री । प्रलये । शोकादिभिर्निष्पन्दनाशे । हर्षशोकादिभिः सकलचेष्टानाशे मूर्च्छापरपर्याये सात्विकभावे ॥ नष्टाचेष्टायस्य । तस्य भावः । तल् ॥

नष्टाग्निः । पुं । प्रमादादिना कारणान्तरवशेनवा त्यक्तवैतानिके । वीरहणि ॥ नष्टोऽग्निर्यस्य ॥

नष्टाजीव्यः ।त्रि । गतजीविकासाधने ॥

नष्टासिद्रूषम् ।न। लोप्त्रे । किञ्चित्प्रासचौरनीतद्रव्ये ॥ इति हारावली ॥

नष्टेन्दुकला । स्त्री । कुहामं ॥ नष्टा इन्दुकलायस्याम् ॥

नसा । स्त्री । नासिकायाम् ॥ इतिचिकाण्डशेषः ॥

नसः । पुं । नासिकायाम् ॥ इतिशब्दमाला ॥ न । नस्ये ॥ इति रत्नमाला ॥ पञ्चविधं नस्तकर्म यथा । प्रतिमर्षो



ऽवपीडश्च नस्यं प्रधमनं तथा । शिरोविरेचनञ्चैव नस्तकर्मतु पञ्चधेति ॥

नस्ता । स्त्री । नासाकृतच्छिद्रे ॥

नस्तितः । पुं । नस्योतो । रज्जुनास्यूतनासे गवादौ । नाथाबैल इति भाषा ॥ नसनम् । गसकौटिल्ये । क्तः । नस्तं कृतमस्य। प्रातिपदिकाद्धात्वर्थे इतिणिच् । ततः कर्मणिक्तः ॥

नस्तोतः । पुं । नस्योते ॥ नस्यतेस्म । गस० । कर्मणि क्तः। नस्तयाउतः ॥

नस्यम् । न । नस्ये । लावणे। नासिकादेयचूर्णादौ ॥ यथा। सिद्धार्थकवचाहिङ्गुकरञ्जं देवदारुच । मञ्जिष्ठाचिफला श्वेताशिरीषो रजनीद्वयम् ॥ प्रियङ्गुनिम्बचिकटु गोमूत्रेणावघर्षितम् । नस्यमालेपनञ्चैवस्नानमुद्वर्त्तनं तथा ॥ अपस्मारविषोन्मादशोषालक्ष्मी ज्वरापहम् । भूतेभ्यश्च भयं हन्तिराजद्वारेचशासनमितिगारुडे १९९ अध्यायः ॥

नस्या । स्त्री । नासिकायाम् ॥ नासारज्वाम् । नकेलइति नाथ इतिच भाषा ॥ त्रि । नासिकायां भवे ॥ नासिकायां भवा । नासिकायै हिता वा । शरीरावयवाद्यत् । नस्नासिकायायत्तसचद्रेष्विति नसादेशः ॥

नस्योतः । त्रि । नस्तिते । नासारज्जु युक्तेवृषादौ ॥ नस्यया नासारज्ज्वा उतः ॥

नह । अ । प्रत्यारम्भे ॥ नच हच ॥

नहि । अ । निषेधे ॥ नह्यति । बाह्व न्धने । इन् ॥

नहिकिम् । अ । निषेधे ॥

नहुषः । पुं । नागविशेषे ॥ सोमवंशभ वेन्द्रपतिविशेषे ॥ सचपुरूरवसोज्ये ष्ठात्मजस्यायुषस्तनय इति पुराणम् ॥ न । तगरे ॥ नह्यति । बाह्व॰ । पृन हिकलिम्यउषच् ॥

नहुषाख्यम् । न । तगरपुष्पे ॥

नहुषात्मजः । पुं । ययातिनृपे ॥

ना । अ । निषेधे ॥ नह्यति । बाह्व न्धने । डा ॥

नाकः । पुं । स्वर्गे ॥ अकंदुःखम् ना स्त्यत्रअकमिति नाकः । नभ्राण्न पादिति नलोपाभावः ॥ को ब्रह्मा त द्भावोनाचेतिवा ॥ न । ब्रह्मलोके ॥

नाकनाथः । पुं । इन्द्रे ॥

नाकनायकः । पुं । इन्द्रे ॥

नाकनायकपुरोहितः । पुं । बृहस्पतौ ॥

नाकपृष्ठः । पुं । स्वर्गे ॥

नाकी । पुं । सुरे । देवतायाम् ॥ नाकः स्वर्गोस्त्यस्य । इनिः ॥

नाकुः । पुं । मुनिविशेषे ॥ पृथ्वीधरे ॥ वल्मीके ॥ न अकति । अक॰ । बाहु लकादुः ॥ यद्वा । नम्यते भूरनेन । णम॰ । फलिपाटिनमिमनिजनांगु कपटिनाकिधतश्चेत्युर्नाकिरादे - शश्च । इकारउच्चारणार्थः ॥

नाकुलः । पुं । नकुलपुत्रे ॥ त्रि । नकुल सम्बन्धिनि ॥ न । नकुलेश्वरीदेव्याः स्थाने ॥ स्वायम्भुव्यपिनाकुले ॥

नाकुली । स्त्री । कुक्कुटीकन्दे ॥ चवि के ॥ रास्नायाम् ॥ नाई इति भा- षाप्रसिद्धे कन्दविशेषे ॥ नाकुली तुवरा तिक्ता कटुकोष्णा विनाशये त् । भोगिलूतावृश्चिकाखुविषज्व रकृमिव्रणान् ॥ यवतिक्तायाम् ॥ श्वे तकण्टकार्याम् ॥ नकुलानामियम् प्रियत्वात् । तस्येदमित्यण् ॥ न आकु लत्वं यया वा ॥

नाक्षत्रः । पुं । मासविशेषे ॥ सचद्विवि धः । सप्तविंशतिनक्षत्रात्मक एकः । यथा । सर्वर्क्षपरिवर्त्तैश्चनाक्षत्रइह चोच्यते इति ॥ सर्वनक्षत्रभुक्त्यातु नाक्षत्रोमास इष्यते इतिच ॥ अस्य प्रयोजनम् । नक्षत्रसत्राण्ययनानि चेन्दोर्मासेन कुर्याद्भगणात्मकेन । स प्तविंशतिनक्षत्रात्मकेन ॥ जन्मनक्ष त्रेशनिभौमवारयोगे मनोदुःखदा नम् । यथोक्तं दीपिकायाम् । जन्मा

न्यर्चे यदिस्यातां वारौभौमशनैश्वरौ । स मासः कल्मषोनामममनोदुःखप्रदायकः ॥ इति ॥ * ॥ द्वितीयः षष्टिदण्डात्मक नक्षत्र भोगकालरूपदिनत्रिंशदात्मकः । यथोक्तं सूर्य्यसिद्धान्ते । नाडीषष्ट्यातु नाक्षत्र मह्नोरात्रं प्रचक्षते । तत्त्रिंशता भवेन् मासः सावनोर्कोदयैस्तथेति ॥ अस्य प्रयोजनमायुर्गणनायाम् । यथा । आयुर्दायेस्मृतं प्राज्ञै र्नाक्षत्रं षष्टिनाडिकमिति ॥ त्रि । नक्षत्रसम्बन्धिनि ॥ तस्येदमित्यण् ॥

नाक्षत्रिकः । पुं । नाक्षत्रमासे ॥ नक्षत्रगणनेनैवनाक्षत्रिक उदाहृतः ॥ त्रि । नक्षत्रसम्बन्धिनि ॥

नाक्षत्रिकी । स्त्री । नक्षत्रदशायाम् ॥ कलौनाक्षत्रिकी दशेति ज्योतिषम् ॥

नागः । पुं । वासुक्यादिपन्नगे । काद्रवेये । बहुफणेसर्पे । मनुष्याकारे फणालाङ्गूलयुक्ते सर्पे ॥ मातङ्गे । हस्तिनि ॥ क्रूराचारिणि ॥ तोयदे । मेघे ॥ नागकेसरे ॥ पुन्नागे ॥ नागदन्तके ॥ मुस्तके ॥ देहानिलप्रभेदे ॥ उद्गारेनाग इत्युक्तोनीलजीमूतसन्निभः ॥ उत्तरस्थितः श्रेष्ठे ॥ नगेभवः । तत्रभवइत्यण् ॥ यद्वा । नगच्छति इति अगः । नअगः । सुप्सुपेति



स० । अनञत्वाद्व न लोपः ॥ न । रङ्गे ॥ सीसके ॥ करणविशेषे ॥ अज्ञातस्थफलम् । नागोद्भवो नागधनाभिलाषी वक्रोक्तिजालोनिलरोगशीलः । क्रोधाग्निसन्तापितबन्धुवर्गो भर्गोपमः स्यात् किलरङ्गभूमौ ॥ रङ्गे सीसकेचपुंलिङ्गोपीति वैद्याः ॥ अस्योत्पत्तिर्यथा । दृष्ट्वा भोगिसुतां रम्यां वासुकि स्तु मुमोच यत् । वीर्य्यं जात स्ततो नागः सर्वरोगापहो नृणाम् ॥ सीसं रङ्गगुणं ज्ञेयं विशेषान्मेहनाशनम् ॥ नागस्तु नागशततुल्यबलं ददाति व्याधिं विनाशयति जीवन मातनोति । वह्निं प्रदीपयति कामबलं करोति मृत्युञ्च नाशयति सन्ततसेवितःसः ॥ * ॥ तयोः पाकहीनयोर्दोषो यथा । पाकेनहीनौ किलवङ्गनागौ कुष्ठानि गुल्मांश्च तथातिकष्टान् । पाण्डुप्रमेहानलमान्द्यशोथभगन्दरादीन् कुरुतः प्रभुक्तौ ॥ * ॥ तयोर्मारणं यथा । अश्वत्थचिञ्चात्वकचूर्णं चतुर्थांशेन निःक्षिपेत् । सतपात्रे विद्रुतो नागो लौहदर्व्याच चालितः ॥ यामैकेन भवेद्भस्म तत्तुल्या स्यान्मनः शिला । काञ्जिकेनस्वयंपिष्ट्वा पचेद्दृढ पुटेन च ॥ स्वाङ्गशीतं पुनः पिष्ट्वा शिलया

काञ्जिकेनच । पुनःपुटेच्छरावाभ्यामेवं षड्भिः पुटैर्मृतिः ॥ * ॥ नागः सिन्दूरवर्णाभो म्रियते सर्वकार्यकृत् ।रतिक्तमधुरो नागो मृतो भवति भस्मसात् ॥ आयुः कीर्त्तिं वीर्यवृद्धिं करोति सेवनात्सदा । रोगान्हन्तिमृतो नागो वङ्गवद्गुणकारकः ॥

नागकन्दः । पुं । हस्तिकन्दे ॥

नागकर्णः । पुं । रक्तैरण्डे ॥

नागकिञ्जल्कः । पुं । नागकेशरपुष्पे ॥

नागकुमारिका । स्त्री । गुडूच्याम् ॥ मञ्जिष्ठायाम् ॥

नागकेशरः । पुं । नागकेसरवृक्षे ॥

नागकेसरः । पुं । काञ्चनाह्वये । चाम्पेये । नागपुष्पे ॥ नागाख्यःकेसरः ॥

नागगन्धा । स्त्री । नाकुलीकन्दे ॥

नागगर्भम् । न । सिन्दूरे ॥

नागच्छत्रा । स्त्री । नागदन्त्याम् ॥

नागजम् । न । सिन्दूरे ॥ वङ्गे ॥ त्रि । नागजाते ॥ नागाज्जातम् । जनी० डः ॥

नागजिह्वा । स्त्री । अनन्तमूलायाम् ॥ मनश्शिलायाम् ॥ नागानांजिह्वेव ॥

नागजिह्विका । स्त्री । नागजिह्वार्थे ॥ स्वार्थेकः ॥

नागजीवनम् । न । वङ्गे ॥ इति हेमचन्द्रः ॥

नागदन्तः । पुं । हस्तिदन्ते ॥ गृहाद्विर्गतदारुणि । खूंटीइति दांतिया इति चभाषा ॥

नागदन्तकः । पुं । भित्तिस्थदारुणि । निर्यूहे ॥ नागदन्तएव । स्वा० कः ॥

नागदन्तिका । स्त्री । वृश्चिकाल्याम् । विछिटी इति गौड भाषा ॥ रामदूत्याम् ॥

नागदन्ती । स्त्री । श्रीहस्तिन्याम् । हस्तिकर्णपलाशाम् । भूरुण्ड्याम् ॥ कुम्भाख्यभेषजे । नागहुलीति प्रसिद्धौषधौ ॥

नागदमनी । स्त्री । क्षुद्रक्षुपविशेषे । जम्बाम् । दुःसहायाम् । मलघ्न्याम् ॥

नागदलोपमम् । न । परूषफले । फालसा इति भाषा ॥

नागद्रुः । पुं । स्नुह्याम् । समन्तदुग्धायाम् ॥

नागद्वीपः । पुं । भारतवर्षस्थो पद्वीपविशेषे ॥

नागनामा । पुं । सीसके ॥

नागनिर्य्यूहः । पुं । नागदन्तके ॥

नागपत्रा । स्त्री । नागदमन्याम् ॥

नागपत्री । स्त्री । लक्ष्मणायामोषधौ ।

नागपदः । पुं । रतिबन्धविशेषे ॥ यथा । पादौ स्कन्धे तथा हस्तौ क्षिपेत्स्त्रियाः भगे लघु । कामदेत् कामुको नारीं

बन्धो नागपदो मतः ॥ इति रति० ॥

नागपाशः । पुं । स्त्रीणां करणे ॥ वरुणस्यायुधे ॥ बन्धविशेषे । साईदया वर्त्तनात्तु नागपाश इति स्मृतः ॥ ब्रह्मग्निमथोदद्यान्नागपाश मथा [illegible] ॥

नागपाशकः । पुं । रतिबन्धविशेषे । यथा । स्वजङ्घाद्वयमध्यस्थां हस्ताभ्यां धारयेत् कुचौ । रमेत् निःशङ्कितः कामी बन्धोऽयं नागपाशकः ॥ इति रतिमञ्जरी ॥

नागपुरम् । क्ली । पाण्ड्यदेशेऽनेन नाम्ना प्रसिद्धे नगरे । उरगपुरे ॥ हस्तिनापुरे ॥ वह्निपुराणोक्ते गङ्गावतरणप्रस्तावप्रसिद्धे देशविशेषे ॥

नागपुष्पः । पुं । पुन्नागवृक्षे ॥ नागकेसरे ॥ नागपुष्पः कषायोष्णो रूक्षो लघ्वामपाचनः । ज्वरकण्डूतृषाश्वासच्छर्द्दिहृल्लासनाशनः । दौर्गन्ध्यकुष्ठवीसर्पकफपित्तविषापहः ॥ चम्पके ॥

नागपुष्पफला । स्त्री । कुष्माण्ड्याम् ॥

नागपुष्पिका । स्त्री । स्वर्णयूथ्याम् ॥

नागपुष्पी । स्त्री । गजपुष्प्यां लतायाम् ॥ नागिन्याम् ॥ नागदमन्याम् ॥

नागफलः । पुं । पटोले ॥

नागबन्धु । पुं । अश्वत्थवृक्षे ॥ नागानाम् बान्धवे ॥

नागबलः । पुं । भीमसेने ॥ त्रि । हस्तितुल्यपराक्रमे ॥

नागबला । स्त्री । गाङ्गेरुक्याम् । गोरखचाकुलिया इति गौडभाषा ॥ नागानां हस्तिनां बला ॥

नागभृत् । पुं । कुण्डसर्पे ॥ इति त्रिकाण्डशेषः ॥

नागमल्लः । पुं । ऐरावते । शक्रगजे ॥

नागमाता । स्त्री । कद्र्वाम् ॥ मनसादेव्याम् ॥ मनःशिलायाम् ॥

नागमारः । पुं । केशराजे । भृङ्गराजे ॥ त्रि । हस्तिमारके ॥

नागयष्टिः । स्त्री । पुष्करिण्यादिस्थितकाष्ठविशेषे । नागाञ्चलायाम् । रथूकाठ इति गौड भाषा । जाखन इति भाषा ॥

नागयष्टिका । स्त्री । खातस्थकाष्ठविशेषे । नागाञ्चलायाम् । जाखन इति भाषा ॥

नागरः । पुं । देवरे ॥ नागरङ्गे ॥ न । मुस्तके ॥ शुण्ठ्याम् ॥ रतबन्धे । त्रि । विदग्धे ॥ नगरोद्भवे ॥ नगरे भवः । तत्र भवइत्यण् ॥ यद्वा । अगं राति । रा० । कः । न अगरः । नञारेण सुप्सुपेतिसमासः ॥

नागरकः । पुं । चौरे ॥ चित्रलेखका

हिंशिल्पिनि ॥ नगरे भवः। नगरा न्कुत्सनप्रावीण्ययोरिति वुञ् ॥ रतिबन्धविशेषे। यथा । ऊरुमूलो परिस्थित्वा योषिदूरुद्वयं यदि । ग्रीवांधृत्वा कराभ्याञ्च बन्धो नागरकोमत इतिरतिमञ्जरी ॥

नागरक्तम्। न। सिन्दूरे ॥ नागस्यशोणिते ॥

नागरघनः। पुं। नागरमुस्तायाम् ॥

नागरङ्गः। पुं। जम्बीरविशेषे। ऐरावते। नारङ्गे। नरङ्गी इति भाषाप्रसिद्धे फलवृक्षे ॥ नागा रज्यन्त्यत्र। रञ्ज०। हलश्चेतिघञ् ॥ नागस्य सिन्दूरस्येव रङ्गोऽस्येति वा ॥

नागरमुस्तकम्। न। भद्रमुस्तके ॥

नागरमुस्ता। स्त्री। मुस्ताप्रभेदे। चक्राङ्गायाम्। नादेयाम्। चूडाला याम्। नागरमोथा इतिभाषा॥

नागराजः। पुं। अनन्ते। शेषे ॥ नागानां राजा। राजाहःसखिभ्यष्टच् ॥ पिङ्गलनागे ॥ ऐरावते ॥

नागराह्वम्। न। शुण्ठ्याम् ॥

नागरी। स्त्री। स्नुहीवृक्षे ॥ विदग्धनार्याम् ॥ नागरभार्यायाम् ॥

नागरीटः। पुं। नागरीगणैः कृतेमङ्गल शब्दे ॥ षिङ्गे ॥

नागरुकः। पुं। नागरङ्गे ॥

नागरेणुः। पुं। सिन्दूरे ॥

नागरेयकः। त्रि। नगर्यां भवादै॥ कत्र्यादित्वाट्ढकञ् ॥

नागलता। स्त्री। मेढ्ने। शेफसि ॥ इतित्रिकाण्डशेषः ॥ ताम्बूल्याम् ॥

नागलोकः। पुं। पाताले ॥ नागानांलोकः ॥

नागवल्लरी। स्त्री। नागवल्ल्याम् ॥

नागवल्लिका। स्त्री। नागवल्ल्याम् ॥

नागवल्ली। स्त्री। ताम्बूल्याम्। पानकी वेल इतिभाषा ॥ नागलोकस्यवल्ली। ष०॥ इयञ्चश्रीवाटाम्लवाटादिनानाग्रामस्थस्थानभेदाद्देवभिन्ना। एकाप्येषा देशस्तत्स्वाविशेषान्नानाकारं याति कायेगुणेच । यथा । श्रीवाटीमधुरा तीक्ष्णा वातपित्तकफापहा। रसाढ्याचरसाढ्या विपाके शिशिरास्मृता ॥ स्यादम्लवाटी कटुकाम्लतिक्ता तीक्ष्णातयोष्णामुखपाककर्त्री। विदाहपित्तास्रविकोपनीचविष्टम्भदा वातनिवर्हणीच ॥ सप्तसोमधुरा तीक्ष्णा कटु कृष्णाच पाचनी। गुल्मोदराध्मानहरा रुचिकृद्दीपनीपरा ॥ * ॥ अन्यच्च। गुहागरेसप्तशिराप्रसिद्धा तत्पूर्णचूर्णाति रसातिरुच्या। सुगन्धितीक्ष्णा मधुरातिहृद्या सन्दीपनीपुंस्त्वकराचव-

ख्या ॥ विरेचनीवक्त्रसुगन्धिकारिणीति ॥ * ॥ नागवाया(ल्ल)सरासुतीच्णामधुराकघ्याहिमादाहनुत्पित्तोद्रेकहरासुदीपनकरीवल्यामुखामोदिनी । स्त्रीसौभाग्यविवर्द्धिनीमदकरीचेयासदावल्लभागुल्माध्मानविवन्धजिच्चकथितातासामालवेतुस्थिता ॥ अग्निपुष्कलिकानामकषायोष्णाकटुस्तथा । मलापकर्षीकाग्रस्थपित्तहृद्दातनाशिनी ॥ दैषिणीयाकटुस्तीच्णाहृद्यादीर्घदलाचसा । कफवातहराकघ्याकटुदीपनपाचनीतिराजनिघण्टः ॥

नागवारिकः । पुं । राजकुञ्जरक्षिपे ॥ गणस्यराजें ॥ गरुडे ॥ चित्रमेखले । मयूरे ॥

नागवीटः । पुं । व्याकरा इतिगौडभाषाप्रसिद्धे । टाङ्करे ॥ इतित्रिकाण्डशेषः ॥

नागवीथी । स्त्री । अश्विन्यादिनक्षत्रत्रयघटितग्रहस्थानचयान्तर्गतोत्तरस्थानस्थपथविशेषे ॥ यथा । सर्वग्रहाणां त्रीण्येव स्थानानि द्विजसत्तमाः । स्थानंजारद्गवंमध्यं तथैरावतमुत्तरम् ॥ वैश्वानरंदक्षिणतोनिर्दिष्टमिहतत्त्वतः । तदेवमध्यमोत्तरदक्षिणमार्गत्रयं प्रत्येकं वीथीत्रयविधाभिद्यते । तथाहि । त्रिभिस्त्रिभिरश्विन्यादिनक्षत्रैः नागवीथी गजवीथी ऐरावती चेत्युत्तरमार्गे वीथीत्रयम् । तथा चोक्तम् । अश्विनी कृत्तिकायाम्या नागवीथीतिशब्दिता । इति विष्णुपुराणम् ॥ कश्यपापत्यविशेषे ॥



नागवृत्तः । पुं । नागकेसरे ॥

नागशुण्डी । स्त्री । डङ्गरीफले ॥

नागसम्भवम् । न । सिन्दूरे ॥ नागसंसम्भवो ऽस्य ॥

नागसुगन्धा । स्त्री । भुजङ्गाच्याम् ॥

नागस्तोककम् । न । वत्सनाभे ॥

नागस्फोता । स्त्री । दन्त्याम् ॥ नागदन्त्याम् ॥

नागहनुः । पुं । नखनामगन्धद्रव्ये ॥

नागहन्त्री । स्त्री । वन्ध्याकर्कोटक्याम् ॥

नागाख्यः । पुं । नागकेसरे ॥ न । हस्तिनापुरे ॥

नागाङ्गना । स्त्री । नागपत्न्याम् ॥ नागयष्टौ ॥ इति मेदिनी ॥ द्विरदस्य शुण्डे ॥ इति हेमचन्द्रः ॥

नागाञ्चला । स्त्री । नागयष्ट्याम् ॥

नागाधिपः । पुं । अनन्ते ॥ हस्तिराजे ॥

नागाननः । पुं । श्रीगणेशे ॥ नागस्यान नमस्य । समुदायशब्दा अवयवेपिवर्त्तन्त इति नागमुखपरो नागशब्दः ॥

नागान्तकः । पुं । गरुडे ॥ नागानामन्तकः ॥

नागारातिः । पुं । वन्ध्याकर्कोटक्याम् ॥

नागालाबुः । स्त्री । कुम्भतुम्ब्याम् ॥

नागाशनः । पुं । गरुडे ॥ नागान् अश्नाति । अश० । ल्युः ॥ नागा अशनं यस्येति वा ॥

नागाह्वम् । न । हस्तिनापुरे ॥

नागाह्वा । स्त्री । लक्ष्मणाकन्दे ॥

नागिनी । स्त्री । नागपुष्प्याम् ॥ नागदन्त्याम् ॥ नागिनी रोचनी तिक्ता तीक्ष्णोष्णा कफपित्तजित् । विनिहन्ति विषं शूलं योनिदोषवमिक्रमीन् ॥

नागी । स्त्री । उभयोषायाम् । स्थूलायांगजयोषिति ॥ नागशब्दाज्जातपदेति स्त्रील्येर्थे ङीष् ॥

नागोदम् । न । उदरत्राणे ॥ इतिहेमचन्द्रः ॥

नागोदरम् । न । उरस्त्राणे ॥ इतिहारावली

नाचिकेतः । पुं । अनले ॥ नचिकेतसाप्राप्ते वैदिकोपाख्यानविशेषे ॥

नाचिकेतुः । पुं । अग्नौ ॥ इतित्रिकाण्डशेषः ॥

नाटः । पुं । नृत्ये ॥ कर्नाट इति प्रसिद्धदेशे ॥

नाटकः । पुं । कामाख्यायां पर्वतविशेषे ॥ यथा । ऐशान्यां नाटके शैलेशङ्करस्य महाश्रमम् । नित्यं वसति तत्रेशस्तद्धीना तु पार्वतीति कालिकापुराणम् ॥

नाटकम् । न । महारूपके । गद्यपद्यप्राकृतभाषामये ग्रन्थविशेषे ॥ देवतादर्शनान्तञ्च कर्त्तव्यं नाटकं बुधैः । राजर्षिदर्शनान्तं वा नेपिदेवैः समामताः ॥ त्रि । नर्त्तके ॥ नाटयति । नाटेर्ण्वुल् ॥

नाटकशैलः । पुं । अद्रिविशेषे ॥ यथा । अस्ति नाटकशैले तु सरो मानससन्निभम् । यत्र सार्द्धं शैलपुत्र्या जलक्रीडां सदा हरः ॥ कुरुते नरशार्दूल स्वर्णपङ्कजशोभिते । तस्य पश्चात् अध्यपर्वभागे भ्रश्युसरित्त्रयम् ॥ अवतीर्य प्रयात्येव दक्षिणं सागरं प्रति । इति कालिका पुराणे ८२ अध्यायः ॥

नाटकसन्धिः । पुं । मुखप्रतिमुखगर्भावमर्शनिर्वहणाख्यपञ्चभेदभिन्ने ॥ यथा । मुखं प्रतिमुखञ्चैव गर्भो विमर्श एव च । तथा निर्वहणञ्चेति नाटके पञ्चसन्धय इति ॥

नाटकीयम् । न । नाटकवर्ण्ये ॥ नाटके भवम् । वृद्धाच्छः ॥

नाटाम्रः । पुं । तरम्बुजे । लतापनसे ॥

नाटारः। पुं। नटतनये ॥ नटस्या अपत्यम्। आरगुदीचामित्यारक् ॥

नाटिका। स्त्री। नाटकविशेषे ॥

नाटेयः। पुं। नट्या अपत्ये ॥

नाटेरः। पुं। नटीसुते ॥ इति हेमचन्द्रः ॥

नाट्यम्। क्ली। तौर्य्यत्रिके। नृत्यगीतवाद्यात्मके ॥ लास्ये। नर्त्तने ॥ वाक्यार्थाभिनये ॥ नटस्येदम्। छन्दोगौक्थिकेति ञ्यः ॥ यो यस्य दयितो भावः स तं नाट्ये निरीक्षते। अतः सर्व्वमनोहारि नाट्यं कस्य न रञ्जकम् ॥ अस्योत्पत्तिर्यथा। इदानु श्रूयते ब्रह्मा शक्रेणाभ्यर्थितः पुरा। चकाराकृष्य वेदेभ्यो नाट्यवेदन्तु पञ्चमम् ॥ उपवेदाश्च वेदानां चत्वारः कथिताः स्मृतौ। तत्रोपवेदो गान्धर्व्वो ब्रह्मणोक्तः स्वयम्भुवे ॥ तेनापि भरतादेः तस्तेन मर्त्त्ये प्रचारितः। शिवाज्ञयानिभृतः स्मादस्य प्रयोजकः। इति सङ्गीतदामोदरः ॥ नटानाङ्कर्म्म। ष्यञ् ॥

नाट्यधर्म्मिका। स्त्री। दर्शनार्थं शास्त्रोक्तनाट्ये ॥ यथा। गीतवाद्यनृत्यत्रयं नाट्यं तौर्य्यत्रिकञ्च तत्। सङ्गीतं प्रेक्षणार्थेऽस्मिन् शास्त्रोक्ते नाट्यधर्म्मिकेति हेमचन्द्रः ॥

नाट्यप्रियः। पुं। शिवे ॥

नाट्यशाला। स्त्री। प्रासादद्वारसमीपगृहे। नाट्यमण्डप इति भाषा ॥ यथा। नाट्यशालाञ्च कर्त्तव्या द्वारदेशसमाश्रयेति गरुडपुराणम् ॥

नाट्यालङ्कारः। पुं। सङ्गीतप्रसिद्धे अष्टषष्टिप्रकारे नाट्यभूषणहेतौ ॥ स च प्रकारः सङ्गीतदामोदरादिभ्यो ज्ञातव्यः ॥

नाट्योक्तिः। स्त्री। नाटकविषयकवचसि ॥ नाट्ये उक्तिः ॥ सा यथा। आर्य्येति ब्राह्मणे। महाराजेति क्षत्रिये। हलेति सख्यौ। हण्डे इति नीचे। हञ्जे इति चेट्याम्। आर्य्यपुत्रेति स्वामिनि ॥ राष्ट्रियेति राजश्याले। हंहो इति समाने। देवेति राजनि। भट्टेति सार्व्वभौमे। आवुत्तेति भगिनीपतौ। अज्जुका इति गणिकायाम्। भाव इति विदुषि। आवुक इति जनके। युवराजो भर्त्तृदारक इति च कुमारे। देवो भट्टारक इति च राजनि। भर्त्तृदारिकेति राजसुतायाम्। देवी इति कृताभिषेकायां नृपस्त्रियाम्। भट्टिनी इति इतरासु राज्ञीषु। अत्र ब्रह्मपद्मसिन्धवध्योक्तौ। अम्बेति मातरि। बाल इति बालायाम्। मारिष इति आर्य्ये। अत्तिकेति ज्येष्ठायां भ

गिन्याम् । निर्भ्रुग्णमितिनिष्ठायाम् ॥ इत्यमरः ॥

नाडिः । स्त्री । नाड्याम् ॥

नाडिकम् । न । कालशाके ॥ इतिभावप्रकाशः ॥

नाडिका । स्त्री । घटिकायाम् । घडी इतिभाषा ॥

नाडिकेलः । पुं । नारिकेले ॥

नाडिचीरम् । न । निर्वेष्टने । नली इतिगौडभाषा ॥ इतिहारावली ॥

नाडिन्धमः । पुं । स्वर्णकारे ॥ नाडीं वंशनलीं धमति । ध्माशब्दाग्निसंयोगयोः । नाडीमुष्ट्योश्चेतिकर्त्तरिखश् । पाघ्रेतिधमादेशः । खित्यनव्ययस्येतिह्रस्वः ॥

नाडिन्धयः । पुं । नाडीपानकर्त्तरि ॥ नाडीं धयति । धेट्० । नाडीमुष्ट्योश्चेतिखश् । ह्रस्वः ॥

नाडिपत्रम् । न । नाडीचशाके ॥

नाडी । स्त्री । शिरायाम् ॥ तत्रकायनाडीत्रिविधा । तत्रैकावायुवहा । अन्या मूत्रविडस्थिरसवाहिनी । अपरा आहारवाहिनीतिकश्चिद्भरतः ॥ * ॥ अथनाडीक्रमः । सार्द्धत्रिकोट्योनाड्यो हिस्थूलाःसूक्ष्माश्चदेहिनाम् । नाभिकन्दनिबद्धास्तास्तिर्यगूर्द्ध्वमधः स्थिताः ॥ द्विसप्ततिःसहस्राणि तासांस्थूलाःप्रकीर्त्तिताः । देहे धमन्योधन्यास्ताः पञ्चेन्द्रियगुणावहाः ॥ तासाञ्च सूक्ष्मसुषिराणि शतानिसप्तस्युस्तानियैरसकृदन्नरसंवहद्भिः । आप्याय्यते वपुरिदं हि नृणां ममीषा मम्भःस्रवद्भिरिवसिन्धुशतैःसमुद्रः ॥ आपादतःप्रततगात्र मशेषमेषा आमस्तकादपिच नाभिपुरःस्थितेन । एतन्मृदङ्गइवचर्मचयेनन्द्धं कायन्नृणामिह शिराशतसप्तकेन ॥ * ॥ सप्तशतानां मध्येचतुरधिकाविंशतिः स्फुटास्तासाम् । एकापरीक्षणीया दक्षिणकरचरणविन्यस्ता ॥ चतुरधिकेतितद्रुक्तम् । तिर्यक्कूर्मोदेहिनां नाभिदेशे वामे वक्त्रं तस्यपुच्छन्त्वयाम्ये । ऊर्द्ध्वभागेहस्तपादौ च वामौ तस्याधस्तात् संस्थितौ दक्षिणौ तौ ॥ वक्त्रे नाडीद्वयंतस्यपुच्छे नाडीद्वयंतथा । पञ्चपञ्चकरे पादे वामदक्षिणभागयोः ॥ तासां मध्ये एकेति । एकस्या एव पादादूर्द्ध्वगमनात् दक्षिणेति प्राधान्येपुरुषाश्रयादुक्तम् । वामे भागे स्त्रियायोज्या नाडी पुंसस्तु दक्षिणे । इतिप्रोक्तो ऽयादेविसर्वदेहेषुदेहिनाम् ॥ * ॥ नपुंसकस्यतुस्त्रीपुंसयोरन्यतराकारप्रकटता मपेक्ष्य परीक्षा । साम्य-

न्तुनस्यादेव । कूचिमस्यतुप्रकृतिस्थ
ता । चरणेति वामस्यतु दक्षिणग्र
न्थिपश्चात्पार्श्वस्था । दक्षिणस्यतु
वामग्रन्थिपश्चात्पार्श्वस्थैव सदुपदे
शात् । करस्यातुवक्ष्यते ॥ * ॥ प
रीक्षाप्रकारमाह । सव्येन रोग
धृतिकूर्परभागभाजा पीड्याथ दक्षि
णकराङ्गुलिकाचयेण । अङ्गुष्ठमूलम
धि पश्चिमभागमध्ये नाडीं प्रभञ्ज
नगतिं सततं परीक्षेत् ॥ सव्येन क
रेण । रोगधृतिर्गदधारणं मित्या
पीडने हेतुः । रोगाणां वातादि पि
शुनदायूनां धारणं यथा स्यात् तथा
पीड्येति कश्चित् । भागइति समुदि
तकफोणिपरम् भाजेति परीक्षा
कालेपि तत्र हस्तस्थितये । आपी-
ड्येत्यर्थान् नाडीम् एतच्चापीडनंवा
तादि पौर्वापर्य्यावबोधनाय । अथे
त्त्या पीडनानन्तरम् नतु परीक्षा-
कालेप्यापीडनस्थितिः । दक्षिणेति
प्रायिकम् स्वपरीक्षाया मन्यथात्वा
त् । एषेति योग्यतया तर्जनीमध्य
मानामिकाग्रहणम् । पश्चिमेत्य
ङ्गुष्ठस्याधोभागः । मूलेति तदुक्तम् ।
अङ्गुष्ठस्यतु मूलेया धमनी जीवसा
क्षिणी । तस्या गतिवशाद्विद्यात् सु
खं दुःखञ्च देहिनाम् ॥ प्रभञ्जनग



तिर्य्यचेति नाड्यन्तरनिरासः । सतत
मि त सुस्थतादशायामपि । तदुक्त
म् । भाविरोगाभिबोधाय सुस्थनाडी
परीक्षणमिति ॥ * ॥ परीक्षणीय
माह । वातं पित्तं कफं द्वन्द्वं सन्निपा
तं तथैवच । साध्या साध्यविवेकञ्च
सर्वं नाडी प्रकाशयेत् ॥ सन्निपात
मिति सामान्यतः । साध्यासाध्यमि
ति विशेषतश्चेत्यर्थः । सर्वमित्येत
दन्यचरोगादिक मित्युपसंहारः ॥
इति नाडीप्रकाशे प्रथमोद्योतः ॥ * ॥
अथ नाडीज्ञानसमय माह । प्रातः
कृतसमाचारः कृताचारपरिग्रहम्
। सुखासीनः सुखासीनं परीक्षार्थ
मुपाचरेत् ॥ प्रातरिति प्रायिकम् म
ध्याह्ने उष्णता इत्युक्तेः ॥ * ॥ नि
षिद्धकालमाह । सद्यः स्नातस्य भुक्त
स्य चुत्तृष्णातपसेविनः । व्याया
माक्रान्तदेहस्य सम्यङ् नाडीन बुध्य
ते ॥ तैलाभ्यङ्गेच सुप्तेचतथाचभो
जनान्तरे । तथा न ज्ञायते नाडी य
था दुर्गतरा नदी ॥ सुप्ते निद्राकाले
। भोजनान्तरे भोजनमध्ये भोजना
वसानमात्रेच । वातमूर्च्छादिचणि
करोगे नायंविधिः ॥ * ॥ अथ वाता
दिस्वभावक्रममाह । आदौच वहते
वातो मध्येपित्तं तथैवच । अन्तेच

वहते श्लेष्मा नाडिकाचयलक्षणम् ॥ आद्याविति। कफोत्पीडितदिती यक्षणे। नतु तर्जनीनिवेशस्थले स्थानभेदस्य कुत्राप्यवक्ष्यमाणत्वात् ॥ * ॥ सुस्थताज्ञानार्थं माह। भूलताग मनप्राया स्वच्छा स्वास्थ्यमयीशिरा। ।प्रायेति बाहुल्येन। स्वच्छा परितो जाड्यरहिता। स्वास्थ्यमयी सुस्थता व्यञ्जिकाच। तथा। प्रातःस्निग्धमयी नाडी मध्याह्ने चोष्णतान्विता। सायाह्ने धावमानाच चिराद्रोगविवर्जिता ॥ चिरादिति। अतीतानागतयोर्द्वयोरप्युक्तिः पथ्याश्रितानामेव ॥ * ॥ वातादीनां क्रमेण गति माह। वातात् वक्रगता नाडी चपला पित्तवाहिनी। स्थिरा श्लेष्मवती ज्ञेयामिश्रिते मिश्रिता भवेत् ॥ वक्रेति। वायोस्तिर्यग्गमनात् तिरोवहन्तीति। एवं तत्प्रकोपादिना वार्त्तादिगतिरपि ज्ञातव्या। चपलेति। वह्नेरूर्द्ध्वज्वलनादूर्द्ध्वचञ्चला। स्थिरेति जलस्याधोगमनादुन्मुखता। मिश्रितेमिश्रितचिह्नाभवति। तेन द्विदोषजे उभयचिह्ना। सर्व्वजे सर्व्वचिह्नेति। चपलतास्थिरतयोः समयभेदेनाविरोधः ॥ *॥ उक्तवक्रादिसामान्यस्य विशेषमाह। सर्पजलौकादि गतिं वदन्ति विबुधाः प्रभञ्जनेन नाडीम्। पित्ते च काकलावकभेकादि गतिं विदुः सुधियः ॥ राजहंसमयूराणां पारावतकपोतयोः। कुक्कुटादिगतिं धत्ते धमनी कफसंवृता ॥ आदिना वाते वृश्चिकगति र्हीलायिता। आदि शब्देन पित्ते कलिङ्गकलविङ्कादिगतिः। कफे गजवराङ्गनादिगतिः ॥ * ॥ द्वन्द्वजस्यापि क्रमेणैव भेदानाह। मुहुः सर्पगतिं नाडीं मुहुर्भेकगतिं तथा। वातपित्तद्वयोद्भूतां प्रवदन्ति विचक्षणाः ॥ भुजगादिगतिञ्चैव राजहंसगतिं धराम्। वातश्लेष्मसमुद्भूतां भाषन्ते तद्विदो जनाः ॥ मण्डूकादि गतिं नाडीं मयूरादिगतिं तथा। पित्तश्लेष्मसमुद्भूतां प्रवदन्ति महाधियः ॥ * ॥ त्रिदोषजा मप्याह। उरगादिलावकादिहंसादीनाञ्च बिभ्रती गमनम्। वातादीनाञ्च सर्व्वं धमनीसम्बन्ध माधत्ते ॥ सममिति-न्यूनाधिकता निरासः। क्रमगत्वात् नासाध्यत्वम्। तथा। लावतित्तिरिवार्त्तीकगमनं सन्निपाततः। कदाचिन्मन्दगा नाडी कदाचित् शीघ्रगा भवेत् ॥ त्रिदोषप्रभवे रोगे विज्ञेया हि भिषग्वरैः। पित्तक्रमतया कृच्छ्रसाध्यत्व मसाध्यत्वञ्च ॥ * ॥ सा

मान्वत: सुखसाध्यत्त्व माह : यदा यं धातु माप्नोति तदा नाडी तथा गतिः। तथाहि सुखसाध्यत्त्वं नाडी ज्ञानेन बुध्यते ॥ अयमर्थः। अदरा ह्यादौ नाडी वातोल्वणा प्रथमं वा तगत्यैव वहति ततो यथायथंपि त्तादिगत्या नतु पित्तोल्वणाद्येवा तादिगत्या तदासुखसाध्यत्त्वं व्यति रेकेण व्यतिरेः। तदुक्त मन्यैः।ना डी यथाकालगति स्वयायां प्रकोपशा न्त्यादिभिरेवभूयः ॥ *॥ अथासाध्य रूपमाह। मन्दं मन्दंशिथिलशिथिलं व्याकुलं व्याकुलंवाहित्वा हित्वा वह तिधमनीयाति नाशच्चसूक्ष्मा। नि त्यंस्थानात्स्खलति पुनरप्यङ्गुलिं सं स्पृशेदाभावैरे वंबहुविधविधैः सन्नि पाता दसाध्या॥ मन्दं मन्दं मुहुरनु द्रुतमप्रखरमिति यावत् । शिथिले गति स्खलद्गतिरूपम्। व्याकुलेतिच त्वरितत्वल:। वाशब्द: समुच्चये। स्थित्वास्थित्वे त्यावृत्याचतद्रूपैवग तिः। नाशमदर्शनम्। गच्छतिकदा चित्ना डीस्पन्दोपिनसम्भाव्यत इत्य र्थः। सूक्ष्मेति यदि लभ्यतेतदातधे वानित्यं प्रायःस्थानमङ्गुष्ठमूलंतस्मा त्स्खलति कदापितत्र न स्पन्दतइ त्यर्थः। तदुक्तम्। क्वचिच्चस्थानवि च्युतेति किञ्चित्स्फुरतीति क्वचा- पि। पुनरपीति कियद्विलम्बेन च ङ्गुली मङ्गुलीमूलमेवमित्येवंरूपै र्बहुभिर्भावैर्धर्मैः। उक्तञ्चान्यच। महातापेपिशीतत्त्वं शीतत्त्वे तापि ताशिरा। नानाविधगतिर्यस्मसस्य स्युर्नसंशयः॥ महेत्याशयाकृष्टपि त्तादिकृततापनिरासः। शीतत्त्वइ- त्यत्रापि महेति सम्बध्यते। तथा। त्रिदोषे स्पन्दते नाडीमृत्युकालेपि निश्चला। निश्चला स्पन्दसामान्याभा वदती। अतीसारादौ कफपादादि विदादिना स्पन्दोपलम्भात् ॥ तथा । पूर्वं पित्तगतिं प्रभञ्जनगतिं श्लेष्मा णमाबिभ्रतीं स्वस्थानभ्रमणं मुहुर्वि दधतीं चक्राधिरूढामिव । तीव्रत्वं दधतीं कलापिगतिकां सूक्ष्मत्वमा तन्वतीं नो साध्यां धमनीं वदन्ति सुधियो नाडीगतिज्ञानिनः ॥ अय मर्थः। पूर्वमितिक्रमविपर्यये पित्ता दिगतिमतीं वारंवारमेवंक्रमेण च क्रोपरिभ्राम्यमाणामिव । तथातीव्र त्व मतिशयवेगम् एवञ्चकदाचिन्म यूरवद्गमनाम्। तथोत्तरोत्तरं कृ शता मापादयन्तीति विशिष्टो हेतुः। तथाचान्यच। याच्युताच स्थिरा स्यन्तायाचेयं मांसवाहिनी। याच

सूक्ष्माच वक्राच तामसाध्यां विदुर्बुधाः ॥ अच्युत्वा सहजतोप्युच्चतरा पृथगिनोक्ततावा। कदाचिद्दितिस्थिरा प्रणिधानेनैव गम्यमानस्पन्दा च। मांसवाहिनी मांसाहारइव गतिमतो लगुडप्रायेति। तदुक्तम्। मांसेन लगुडाकृतिः। मांसेनसमं वहतीति नयुक्तं तद्रूपपरिज्ञापकत्वकारणानुक्तत्वात्। इयमपिविशिष्टबोधनाय। याचसूक्ष्माचवक्राचेति पृथगिववाक्यान्तरमिति ॥ * ॥ असाध्यत्वापवादमाह। भारप्रवाहमूर्च्छाभयशोकप्रमुखकारणान्नाडी। सम्मूर्च्छितापिगाढं पुनरपिसाजीवितं धत्ते ॥ चिरतरबहुलभारोद्वहनेनवा विषवेगधारावाहिरुधिरदर्शनादिजनितमूर्च्छयावा राक्षसादिसन्दर्शनादिभयेनवा पुत्रादिविरहजनितशोकातिरेकेणवा सम्मूर्च्छितापि कृतिनिस्पन्दापि। गाढमिति सुतरां काश्यादियोगेपीत्यर्थः। पुनरितिसाध्यतां यातीत्यर्थः। भावानां रक्ष्यादीनां प्रवाहइति न युक्तम् भयशोकयोः पृथग्विधानात्। प्रमुखेत्यनेन हेत्वन्तराभिधानम्। तदुक्तम्। पतितः सन्धितो भेदी नष्टशुक्रश्च योनरः। शाम्यते विस्मयस्तस्य न कि



ञ्चिन्मृत्युकारणम् ॥ पतित उच्चाटितः सन्धितोऽस्थ्यादिसन्धानेन संधितः। भेदी अतीसारवान्। नष्टशुक्रो यक्ष्मादिनातिरमणेनवा शुक्रक्षयवान्। विस्मयोऽसाध्यत्वानुमानं प्राप्यतिनावतरति। कारणं प्रागुक्तमेतदेव। अन्यत्रापि। तथाभूताभिषङ्गेपित्रिदोषवदुपस्थिता। समाङ्गा वहते नाडी तथाच न क्रमंगता ॥ अपमृत्युर्नरोगाङ्गा नाडी ततसन्निपातवत्। भूताभिषङ्गे तथाभूतसामान्याभिषङ्गेच देवकृष्टादौ नाडी सन्निपातवसंशालिनी उपस्थिता। आपाततएव भवतिनतु तत् फलप्रदा। भेदमाह। समेति। वातपित्तकफस्वभावक्रमवर्ती तथाक्रमं व्यतिक्रम्य नगता। तस्मादेव अपमृत्युः अपगतो मृत्युर्यस्याः सा तथा। परमार्थतःसन्निपातवदपि सन्निपातजन्या न स्यादिति। तदुक्तम्। स्वस्थानहीने शोकेच हिमाक्रान्तेच निर्गदाः। भवन्ति निश्चला नाड्यो न किञ्चित्तत्र दूषणमिति ॥ स्वस्थानहीने उच्चाटितः पतने। अङ्गुष्ठमूलत चरण इति तत्वार्थः। निर्गदा इत्यसङ्गतिः निर्गदा अपिनिश्चला भवन्ति। दूषणमसाध्यत्वलक्षणः। अन्ये

स्वाहुः। स्तोकं वातकफं जुष्टं पित्तं वहति दारुणम्। पित्तस्थानं विजानीयात् भेषजं तस्य कारयेदिति॥ अयमर्थः। वातकफाभ्यां नाडी किञ्चिद्वहति दुष्टं क्षीणत्वाधिकत्वाभ्यामपि विशेषा दुल्लणं पित्तं विषमवेगेन वहति तदातत् प्रतीकारार्थं भेषजं कुर्यात्। असाध्यतान स्यादिति यावत्। अत्रकश्चित्। स्वस्थानच्यवनं यावद्धमन्या नोपजायते। तावच्चिकित्सासत्त्वेपिनासाध्यत्वमितिस्थितिरिति॥ तच्चप्रायिकं बहुधाव्यभिचारदर्शनात्। हन्ति स्थानविच्युतेत्यत्र चकारस्यायोगव्यवच्छेदकत्व मित्यर्थः॥ *॥ प्रसङ्गात् कालनिर्णयमाह। भूलताभुजगाकारा नाडीदेहस्य सङ्क्रमात्। विशीर्णा क्षीणतां याति मासान्ते मरणं भवेत्॥ कदाचित् मही लतावत् कृशा तत्गतिर्भुजगवक्रगमनाच। कदाचित् सर्पवत् परिपुष्टा तद्गतिवदलवत्तरवक्रगमनाचेति वैशिष्ट्येन सुस्थदशातो भेदः। इत्थम्भ कदाचिद्दलच्यता मति कृशताञ्च यदागच्छति। देहेति देहक्रम मपेक्ष्य तेन देहोपि यदा स्थूलः शोथादिना कदाचिच्च कृशः स्या



त् तदादितीयेमासिम्रियत इति। तथा। चणाद् गच्छति वेगेन शान्तां लभते चणात्। सप्ताहात् मरणं तस्य यद्यङ्गेशोथवर्जितः॥ चणादिति द्रुतं नतु कदाचिदिति। शान्तता मनुपलभ्यमानत्वम्। शोथेति तन्मात्रसम्बन्धे तुना चिरं मरणाय चिरमेवेत्यर्थः। तथा। हिमवद् विशदा नाडी ज्वरदाहेनतापिनाम्। त्रिदोषस्पर्शभजतां तदा मृत्युर्दिनत्रयात्॥ यदानिरन्तरं ज्वरदाहतापैः शैत्यञ्च नाड्याः। त्रिदोषेति सन्निपातलक्षणसत्त्व एव भवति। तदा। निरीक्ष्यादक्षिणे पादेतदावैषाविशेषतः। मुखेनाडी वहेन्नित्यं ततस्तु दिनतुर्यकम्॥ गतिन्तुभ्रमरस्येव वहेदेकदिनेनतु। कन्देनस्पन्दते नित्यं पुनर्लगति चाङ्गुलौ॥ मध्ये द्वादशयामानां मृत्युर्भवति निश्चितम्॥ दक्षिणा इतिपुंसः। स्त्रियास्तु वाम एव। तथेति करस्येव विशेषतो विशेषज्ञानार्थम्। यदिचोभयनाड्यपि मुखेपुरोभागे नित्यं सदा वहति तदा दिनचतुष्टयं प्राप्य भ्रमरस्य परिभ्रमणरूप गमन मिव मुखएव यदिवहति तदैकदिनेन। कन्दे मूलेस्पन्दनस्याभावे कदाचिन

न स्पन्दते स्वल्पं स्पन्दत इति सम्भा व्यते । निश्चयं प्राय: पुनश्चाङ्गुलौ तन्तू लो कदापि लगति तदा तस्मादार भ्य द्वादशप्रहरमध्यएव मृत्युरि- ति । तथा । स्थित्वा नाडी मुखे य स्य विद्युद्द्योति रिवेच्यते । दिनैकं जीवितं तस्य द्वितीये म्रियते ध्रुवम् ॥ स्थित्वेच्या नृत्या स्थित्वा स्थित्वा विद्युत् स्फुरणमिवलक्ष्यते द्वितीय इत्यष्टप्रहरादुर्द्धं मित्यर्थः । तथा । स्वस्थानविच्युता नाडी यदा वह ति वा नवा । ज्वालाच हृदये तीव्रा तदा ज्वालावधिस्थितिः ॥ न वेति स्थित्वा स्थित्वे त्यर्थः । इत्यन्य यद साध्यलक्षण मुक्त मवस्थाना दपवा दविरहेसति तस्यार्थप्रवेशो यथा यथ मार्यमतिभिरवगन्तव्य इतिनेह प्रतन्यते ग्रन्थगौरवभयात् । मन्दं मन्दमिति अनेनच भूलतागमना कारेति विरुध्यते तस्य तावत्कालि कमरणविषयत्वात् । सर्व मिदं सर्व रोग एव बेदितव्यं ज्वरमात्रेतु भ्रम एवेति ॥ * ॥ इतिनाडीप्रकाशे द्वि तीयोद्योतः ॥ * ॥ अथरोगेषु नि रूपणीयेषु प्रधानतया प्रथमं ज्वर निरूपण माह । तत्र ज्वरपूर्वरूपे । अङ्गग्रहेण नाडीनां भवन्ति सर्वदा:



श्रवा: । श्रव: प्रदशतांयाति ज्वरदाहो भिभूतये ॥ सान्निपातिकरूपेण भ वन्ति सर्ववेदना: ॥ * ॥ ज्वररूपमा ह । ज्वरकोपेच धमनी सोष्णा वे गवती भवेत् । उष्मा पित्तादृते ना स्ति ज्वरो नास्त्युष्मणा विना ॥ उष्णा वेगवरा नाडी ज्वरकोपे प्रजायते ॥ अन्यच्च । ज्वरेच वक्राधावन्ती त थाच मरुत: श्रवे । रमणान्ते निशि प्रातस्तथा दीपशिखा यथा ॥ * ॥ त त्रापि विशेषमाह । सौम्यासूक्ष्मास्थि रामन्दा नाडी सहजवातजा । स्थू लाच कठिनाशीघ्रा स्पन्दते तीव्रमा रुते ॥ द्रुताच सरला शीघ्रा दीर्घा पित्तज्वरे भवेत् । शीघ्र माहिनन्नंना ड्या: काठिन्याच्च चलातथा ॥ मन्ला जीर्णा नातितरां स्पन्दनञ्च प्रकीर्त्ति तम् । नाडीतन्तुसमामन्दा शीतला श्लेष्मदोषजा ॥ * ॥ द्वन्द्वजमाह । चञ्चला तरला स्थूला कठिना वात पित्तजा । ईषच्च दृश्यते तूर्णामन्दा स्यात्श्लेष्मवातजा ॥ निरन्तरं खरं रूक्षं मन्दश्लेष्मातिवातलम् । रूक्ष वातभये तस्य नाडी स्यात् पित्तस न्निभा ॥ रूक्षा शीत स्थिरा नाडी पित्तश्लेष्मसमुद्भवा ॥ प्रसङ्गादाह । अध्येकरेवहे नाडी यदि सैन्ना पित्त

ध्रुवम् । तदानूनं मनुष्यस्य रुधिरापूरिता मला: ॥ * ॥ आगन्तुकरूपभेदमाह । भूतज्वरे सेकद्रवातिवेगा धावन्ति नाड्योहि यथाब्धिगामा: । तथा । एकाहिकेन क्वचन प्रदूरेच्च शान्तगामा विषमज्वरेण । द्वितीयके वापित्रितीयतुर्ये गच्छन्तितप्ता भ्रमिवत् क्रमेण ॥ * ॥ अन्यचापि । उष्णा वेगधरा नाडी ज्वरकोपे प्रजायते । उद्वगक्रोधकामेषु भयचिन्ताश्रमेषु च ॥ भवेत् क्षीणगति र्नाडी ज्ञातव्या वैद्यसत्तमै: ॥ प्रसङ्गादाह । व्यायामे भ्रमणे चैव चिन्तायां श्रमशोकत: । नानाप्रभावगमना शिरा गच्छति विज्वरे ॥ * ॥ अजीर्णरूपमाह । अजीर्णेतु भवेत् नाडी कठिना परितोजडा । प्रसन्नाचद्रुता शुद्धा त्वरिता च प्रवर्त्तते ॥ * ॥ तद्विशेषमाह । पक्वाजीर्णे पुष्टिहीना मन्दं मन्दं वहेज्जडा । असृक्पूर्णाभवेत् कोष्णागुर्वीसामा गरीयसी ॥ * ॥ प्रसङ्गाद् भक्षणस्थानमाह । पुष्टिस्तैल गुडाहारे मांसे च लगुडाकृति: । क्षीरे च स्तिमितावेगा मधुरे भेकवद्गति: ॥ रम्भागुडवटाहारे रूक्षशुष्कादिभोजने । वातपित्तार्त्तिरूपेण नाडी वहति निष्क्रमम् ॥ * ॥ अथरसस्थानम् । मधुरे वर्हिगमना तिक्ते स्याद्भूलता गति: । अम्ले कोष्णा प्लवगति: कटुके भृङ्गसन्निभा ॥ कषाये कठिनाम्लानवाल्लवणे सरला द्रुता । एवं द्वित्रिचतुर्योगे नाना धर्मवतीधरा ॥ तथा । द्रवे ऽतिकठिना नाडी कोमला कठिनाशने । द्रवद्रव्यस्यकाठिन्ये कोमला कठिनापिच ॥ क्षौद्रे पृथग् ग्रन्थिलेवपिष्टे पुष्टेव जायते ॥ * ॥ अग्निमान्द्यधातुक्षयलक्षणमाह । मन्दाग्ने: क्षीणधातोश्च नाडी मन्दतरा भवेत् । तदुक्तम् । क्षीणधातौच मन्दाग्नौ नाडी क्षीणतमा ध्रुवम् । तथा । मन्दे ऽग्नौ क्षीणतां याति नाडी हंसाकृतिस्तथेति । अन्येतु । आमाशमे पुष्टिविवर्द्धनेन भवन्ति नाड्यो ऽग्रभुजाभिवृत्ता: । आहारमान्द्या दुपवासतो वा तथैव नाड्यो भुजगाग्रमाना: ॥ * ॥ प्रसङ्गाद्दीप्ताग्निस्थानमाह । लघ्वी भवति दीप्ताग्ने स्तथा वेगवती मता ॥ * ॥ प्रसङ्गाद् ग्रहणी मप्याह । पादे च हंसगमना करे मण्डूकसंप्लवा । तस्याग्ने र्मन्दता देहे त्वथवा ग्रहणी गदे ॥ तथा । भेदेन शान्ता ग्रहणी गदेन निर्वीर्यरूपा त्वतिसारभेदे । विलम्बिकायां प्लवगा कदाचि दामा

तिसारेपृथुता जडाच ॥ * ॥ अथ विसूचिकाज्ञानम् । निरोधे मूत्रस्य कृतोविड्ग्रहे स्थितराश्रिताः । विसूचिकाभिभूतेच भवन्ति भेकवत् क्रमाः ॥ * ॥ प्रसङ्गा दानाहमूत्रकृच्छ्रज्ञान माह । आनाहे मूत्रकृच्छ्रे च भवेन्नाडी गरिष्ठता ॥ * ॥ शूलज्ञान माह । वातेन शूलेन मरुत् प्रवेन सदैववक्रा हि शिरावहन्ती । ज्वालामयी पित्तविचेष्टितेन साध्यान शूलेनच पुष्टरूपा ॥ * ॥ अथप्रमेहज्ञानम् ॥ प्रमेहे ग्रन्थिरूपासा सुतप्ता त्वामदूषणे ॥ * ॥ विषविष्टम्भगुल्मज्ञानमाह । उत्पित्तु रूपा विषरिष्टिकायांविष्टम्भगुल्मेन च वक्ररूपा । अत्यर्थवातेन अधः-स्फुरन्ती उत्तानभेदिन्यसमाप्तकाले ॥ * ॥ गुल्मे विशेष माह कश्चित् । गुल्मेन कम्पाऽथ पराक्रमेण पारावतस्येव गतिङ् करोति ॥ * ॥ अथ भगन्दरज्ञानम् । व्रणार्थं कठिने देहे प्रयाति पैत्तिकं क्रमम् । भगन्दरानुरूपेण नाडीव्रणनिवेदने ॥ प्रयाति वातिकं रूपं नाडी पावकरूपिणी ॥ * ॥ अथ वान्त्यादिज्ञानम् । वान्तस्य शल्याभिहतस्य जन्तोर्वेगावरोधाकुलितस्य भूयः । गतिं



विधत्ते धमनी गजेन्द्रमरालमाने व कपोलवेगेन ॥ * ॥ स्त्रीरोगादिक मपि रक्तादिज्ञानक्रमेण ज्ञातव्यम् ॥ कचित् प्रकरणोल्लेखात् कचिदौचित्यमात्रतः । कचिद्देशात् कचित् कालात् सङ्कीर्णगदनिर्णयः ॥ नाडीपरिचयज्ञानं प्रायशो नैव दृश्यते । तेन धाष्टर्येन मयोक्तं यत् तत् समाधेय मुत्तमैः ॥ * ॥ इतिशङ्करसेनकविराजकृतौ नाडीप्रकाशे तृतीयोद्योतः ॥ * ॥ * ॥ * ॥ अथ भावमिश्रोक्ता नाडी परीक्षा । पुंसो दक्षिणहस्तस्य स्त्रियो वामकरस्य तु । अङ्गुष्ठमूलगां नाडीं परीक्षेत भिषग्वरः ॥ अङ्गुलीभिस्त्रिभिर्नाडीमवहितः स्पृशेत् । तच्चेष्टया सुखं दुःखं जानीयात् कुशलोऽखिलम् ॥ सद्यः स्नातस्य सुप्तस्य क्षुत्तृष्णातपशीलिनः । व्यायामश्रान्तदेहस्य सम्यङ् नाडी न बुध्यते ॥ वाते ऽधिके भवेन् नाडी प्रव्यक्ता तर्जनी तले । पित्ते व्यक्ता मध्यमायां तृतीयाङ्गुलिगा कफे ॥ तर्ज्जनीमध्यमामध्ये वातपित्ते ऽधिके स्फुटा । अनामिकायां तर्ज्जन्यां व्यक्ता वातकफे भवेत् ॥ मध्यमानामिकामध्ये स्फुटा पित्तकफे ऽधिके । अङ्गुलि

पित्तयेपि स्यात् प्रव्यक्ता सन्निपातिनः ॥ वातात् वक्रगति नाडी पित्तात् उत्प्लुत्यगामिनी । कफात् मन्दगतिर्ज्ञेया सन्निपाता दृतिद्रुता ॥ वक्रमुत्प्लुत्य चलति धमनी वातपित्ततः । वहेत् वक्रञ्च मन्दञ्च वातश्लेष्माधिकेत्वतः ॥ उत्प्लुत्य मन्दं चलति नाडी पित्तकफे ऽधिके । कामात् क्रोधात् वेगवहा चीणा चिन्ताभययुता ॥ स्थित्वास्थित्वाचलेत् या सा च न्ति स्थानच्युता तथा । अतिचीणा चशीताच प्राणान् हन्ति न संशयः ॥ ज्वरकोपेन धमनी सोष्णा वेगवती भवेत् । मन्दाग्नेः चीणधातो स्त्वसैव मन्दतरा मता ॥ चपला चुधितस्य स्यात् तृप्तस्य भवति स्थिरा । सुखिनो ऽपि स्थिरा ज्ञेया तथा बलवती मता ॥ इति ॥ * ॥ * ॥ * ॥ प्रसङ्गात् योगिना मुपकाराय इडादिनाडीनां निरूपणम् । दक्षिणांशः स्मृतः सूर्यो वामभागो निशाकरः । नाडीदेश विदु स्तासु मुख्या स्तिस्रः प्रकीर्त्तिताः ॥ इडा वामेतनोर्मध्ये सुषुम्णा पिङ्गला परे । मध्या तास्वपि नाडी स्यादग्नीषोमस्वरूपिणी ॥ अथेडा वाममुष्काधः स्याधनुर्वक्रा वा मनासापर्यन्तंगता । एवं पिङ्गला द



क्षिणाण्डाधः स्या धनुर्वक्रा दक्षिणनासान्तंगता । पृष्ठवंशान्तर्गता सुषुम्णे त्यर्थः । इतिसारदातिलकम् ॥ * ॥ नाडीनां संवहोदेवि कन्दयोनिः खगाण्डवत् । तत्र नाड्यः समुत्पन्नाः सहस्राणां दिसप्ततिः ॥ कन्दस्य पद्मस्य योनि रुत्पत्ति स्थानं शालूकमितियावत् ॥ प्रधानाः प्राणवाहिन्यो भूयस्तत्र दश स्मृताः । इडा चपिङ्गला चैव सुषुम्णा च तृतीयिका ॥ गान्धारी हस्तिजिह्वाच पूषा चैवयशस्विनी । अलम्बुषाकुहूश्चैव शङ्खिनीच दशस्मृताः ॥ एवं नाडीमयं चक्रं विज्ञेयं शक्तिचक्रके । इडायाः पिङ्गलायाश्च मध्ये यासा सुषुम्णिका ॥ इयञ्च त्रिगुणा ज्ञेया ब्रह्मविष्णुशिवात्मिका । रजोगुणाच वज्राख्या चित्रिणी सत्त्वसंयुता ॥ तमोगुणा ब्रह्मनाडी कार्यभेदक्रमेणचेति निरुत्तरतन्त्रे प्रथमः पटलः ॥ * ॥ इडापिङ्गलयोः स्वरूपंयथा । इडाच शङ्खचन्द्राभा तस्या वामे व्यवस्थिता । पिङ्गला सितरक्ताभा दक्षिणं पार्श्वमाश्रितेति योगार्णवः ॥ इडायां संश्रितश्चन्द्रः पिङ्गलायां दिवाकर इति तन्त्रान्तरम् ॥ गुच्छस्य काण्डे । नाले ॥ ग्रन्थान्तरे ॥ गण्डदूर्वायाम् ॥

॥ कुहनपर्यायाम् ॥ षट्चणकाले। घटिकायाम् । षष्टिपलात्मककाले ॥ तृणान्तरे ॥ वेष्टितत्वक्स्याधारभेदे ॥ नालयति नलत्यनेनवा । मलगन्धे । पचाद्यच् । हलश्चेति घञ् वा । डलयोरेकत्वम् । गौरादित्वात् ङीष् ॥ यद्वा । नाडयति नाड्यते वा । नडभ्रंशे । चुरादिः । अचइः । ङीष् ॥

नाडीकः । पुं । पट्टशाके । पटुआ इति भाषा ॥ नाडीकोरक्तपित्तघ्नो विष्टम्भी वातकोपनइतिभावप्रकाशः ॥

नाडीकलापकः । पुं । सर्पाक्ष्याम् ॥

नाडीकेलः । पुं । नारिकेले ॥ इतिशब्दरत्नावली ॥

नाडीचः । पुं । शाकविशेषे । केचुके । बिम्बरोचने ॥ नाडीचशाकं द्विविधं तिक्तं मधुरमेवच । रक्तपित्तहरंतिक्तं कृमिकुष्ठविनाशनम् ॥ मधुरंपिच्छिलंशीतंविष्टम्भिकफवातकृत् ॥ इतिराजवल्लभः ॥

नाडीचक्रम् । न । नाभिमण्डलस्थेचक्रविशेषे ॥ नाभिमण्डलमासाद्यकुकुटाण्डमिवस्थितम् । नाडीचक्रमितिप्राहुस्तस्मान्नाड्यः समुद्गताः ॥

नाडीचरणः । पुं । खगे । पक्षिणि ॥

नाडीजङ्घः । पुं । काके ॥ ब्रह्मणोदयितेबकविशेषे ॥ मुनिविशेषे ॥

नाडीतरङ्गः । पुं । काकोले ॥ हिण्डके ॥ रतहिण्डके ॥ इतिमेदिनी ॥

नाडीतिक्तः । पुं । नेपालनिम्बे ॥

नाडीदेहः । पुं । भृङ्गिनाम्नि शिवस्य द्वारपाले ॥

नाडीनक्षत्रम् । न । जन्मनक्षत्रे ॥

नाडीविग्रहः । पुं । भृङ्गिणि । शिवद्वारपालविशेषे ॥

नाडीव्रणः । पुं । सद्यामलद्व्रणे । नाडीव्रणइति नासूर इतिचभाषा ॥ नाड्यांव्रणः ॥ विडङ्गत्रिफलाकृष्णाचूर्णंलीढंसमाक्षिकम् । हन्तिकुष्ठंकृमीन्मेहनाडीव्रणभगन्दरान् ॥ इतिगरुडपुराणम् ॥

नाडीशाकः । पुं । नाडीके ॥

नाडीस्नेहः । पुं । भृङ्गिणि । शिवद्वास्थे ॥

नाडीहिङ्गु । न । हिङ्गुप्रभेदे । पत्राशाखे । रामठ्याम् ॥

नाणकः । त्रि । प्रशस्ते ॥ नाणकःकुत्सितः ॥ तदिरुद्धः ॥ न । मुद्राचिह्नितनिष्कादौ ॥ यथा । तुलाशासनमानानां कूटकृन्नाणकस्यच । एभिश्चव्यवहर्तायः स दाप्योदण्डमुत्तममिति याज्ञवल्क्यः ॥

नातिमानिता । स्त्री । अतिमानित्वाभावे । पूज्येषु नम्रतायाम् ॥

नाथः । पुं । । कुलगुरौ ॥ कुलपरम्परागतस्वामिनि ॥ नासारज्जौ ॥ ऐश्वर्ययुक्ते । अधिपे । आर्ये । स्वामिनि ॥ त्रि । प्रार्थनीये ॥

नाथमानः । त्रि । उपतप्यमाने ॥ याचमाने ॥

नाथवान् । त्रि । परायत्ते । परतन्त्रे ॥ नाथोऽस्यास्ति । तदस्यास्तीति मतुप् ॥

नाथहरिः । पुं । पशौ ॥ नाथं हरतीति विग्रहे हरतेर्दृतिनाथयोः पशाविति नाथकर्मोपपदाद्धरतेरिन् प्रत्ययः ॥

नादः । पुं । ध्वनौ । शब्दे ॥ वर्णे ॥ अर्द्धेन्दौ । अर्द्धमात्रायाम् ॥ णद० । घञ् ॥ ब्रह्मस्वरूपे घोषविशेषे ॥ यथा । सच्चिदानन्दविभवात् सकलात् परमेश्वरात् । आसीच्छक्तिस्ततो नादस्तस्माद्बिन्दुसमुद्भवः ॥ नादो बिन्दुश्च बीजञ्च स एव त्रिविधो मतः । भिद्यमानात् पराद्बिन्दोरुभयात्मा रवोऽभवत् ॥ स रवः श्रुतिसम्पन्नः शब्दो ब्रह्माभवत्परमिति ॥ सकलात् मूर्त्तात् । नादो घोषः । बिन्दुः प्रणवः स च वाजञ्च सर्ववर्णप्रभवत्वात् ॥ * ॥ नाभेरूर्द्ध्वं हृदिस्थानान्मारुतः प्राणसंज्ञकः । नदति ब्रह्मरन्ध्रान्ते तेन नादः प्रकीर्त्तितः ॥ अपि च । आकाशाग्निमरुज्जातो नाभेरूर्द्ध्वं समुच्चरन् । मुखेऽभिव्यक्तिमायाति यः स नाद इतीरितः ॥ स च प्राणिभवोऽप्राणिभवश्चोभयसम्भवः । आद्यः कायभवो वीणादिभवस्तु द्वितीयकः ॥ तृतीयोऽपि च वंशादिभव इत्थं त्रिधा मतः । यदुक्तं ब्रह्मणः स्थानं ब्रह्मग्रन्थिश्च यो मतः ॥ तन्मध्ये संस्थितः प्राणः प्राणाद्वह्निसमुद्भवः । वह्निमारुतसंयोगान्नादः समुपजायते ॥ न नादेन विना गीतं न नादेन विना स्वरः । न नादेन विना रागस्तस्मान्नादात्मकं जगत् ॥ न नादेन विना ज्ञानं न नादेन विना शिवः ॥ नादरूपं परं ज्योतिर्नादरूपी परं हरिः ॥ इति सङ्गीतदामोदरः ॥

नादेयम् । न । सैन्धवलवणे ॥ सौवीराञ्जने ॥ नदीनदसम्बन्धिजले ॥ शैषिकेष्वर्थेषु नद्यादिभ्यो ढक् ॥ नद्या नदस्य वा नीरं नादेयमिति कीर्त्तितम् । नादेयमुदकं रूक्षं वातलं लघु दीपनम् ॥ अनभिष्यन्दि विशदं कटुकं कफपित्तनुत् ॥ नद्यः शीघ्रवहा लघ्व्यः सर्वा याश्चामलोदकाः । गुर्व्यः शैवलसञ्छन्ना मन्दगाः कलुषाश्च याः ॥ नदीसरस्तडागस्थे कूपप्रस्र

वर्णादिजे । उदके देशभेदेन गुणा न्दोषांश्चलक्षयेत्॥ पुं । कामहष्ट्ये ॥ वानीरवृक्षे ॥ त्रि । नदीनदसम्बन्धिजलादौ ॥ नदीभवे॥ अग्राह्ये ॥ अवध्यदेये ॥ यथा । नादेयंनादेयं शरदि वसन्तेच नाऽऽदेयमिति । अस्यार्थः । नदीभवं नादेयं जलं शरदि न अदेयम् । अपितुदेयं दातव्यमिति। वसन्तेच पुनस्तदेव नादेयं मग्राह्यमिति ॥

नादेयिका । स्त्री । नादेय्याम् ॥ नादेय्येव । स्वार्थेकः । ह्रस्वः ॥

नादेयी । स्त्री । नागरङ्गे॥ जयायाम् । पताकाविशेषे । वैजयन्तिकायाम् ॥ अम्बुवेतसे ॥ भूमिर्जम्बाम् ॥ जवायाम् ॥ व्यङ्गुष्ठे ॥ अग्निमन्थे ॥ काकजंबाम्॥ नद्यांभवा । नद्यादिभ्यो ढक् । टिड्ढेतिङीप् ॥

नाना । अ । विनार्थे॥ नाना नारीं निष्फला लोकयात्रेतियथा ॥ अनेकार्थे॥ यथा । नानाविधं देहभृतां समाजम्॥ उभयार्थे॥ नेति नाना । विनञ्भ्यांनानाञौनसहेति नञो-नाञ्प्रत्ययः ॥

नानाकन्दः । पुं । पिण्डालौ॥ बहुविधमूले ॥

नानात्त्वम् । न । अनेकभावे । द्वैतदर्शने॥ यथा। जीवात्मनोरनन्यत्त्वमभेदेन प्रशस्यते। नानात्त्वं निन्द्यतेयच्चतदेवंहि समञ्जसमिति गौडपादाः॥ द्वैतंहि सर्वं प्राणिसाधारणं स्वाभाविकं शास्त्रवहिष्कृतैःकुतार्किकैर्विरचितं नानात्त्वंदर्शनं नतुतद्द्वितीयमस्तीत्त्यादिश्रुत्यानिन्द्यते यावेदवाह्याःस्मृतय इत्त्यादिस्मृत्त्याच॥

नानाध्वनिः। पुं। वीणावेणुकाहलादिशब्देषु ॥ इति हारावली ॥

नानाननः । त्रि । अनेकविधास्ये ॥ नानाप्रकाराणि आननानि यस्य ॥

नानारूपः । त्रि । बहुविधे । विविधे । अनेकप्रकारे॥ नाना रूपं यस्य ॥

नानार्थः । त्रि । अनेकार्थे॥ भिन्नप्रयोजने ॥

नानावर्णः । पुं । बहुविधशुक्लादिवर्णे । चित्रे । कर्वुरे ॥ त्रि । तद्वति ॥

नानावादानुरोधः । त्रि । भगवति परमेश्वरे ॥ अस्ति नास्ति सर्वज्ञः अल्पज्ञः वद्धः मुक्तः एकः अनेक इत्त्यादीन् नानावादान् अनुरुणद्धि माययानुवर्त्ततेय इतिव्याख्यानात् ॥

नानाविधः । त्रि । अनेकप्रकारे ॥ नानाविधा यस्यसः ॥

नानुष्ठेयः । त्रि । अकर्त्तव्ये। अननुष्ठेये॥

नान्तरीयकम् । त्रि । अवश्यम्भाविनि॥

यथा। प्रतिवन्धकाभावे नान्तरीयकी कार्य्योत्पत्तिः । अवश्यम्भाविनी-त्यर्थः ॥

नान्त्रम् । न । स्तोत्रे ॥ नमति अनेनवा । णम० । असुजिगमिनमीतिष्ट्रन् इट्ठिश्च ॥

नान्दी । स्त्री । समृद्धौ ॥ नाटकादौमङ्गलश्लोके । मङ्गलपाठे ॥ यथोक्तंभरतादिभिः। आशीर्वचनसंयुक्ता स्तुतिर्यस्मात्प्रवर्त्तते। देवद्विजनृपादीनां तस्मान्नान्दीति सास्मृता ॥ * ॥ नाटकेविघ्नविघातायादौनान्दीकार्य्या । यदाहभरतः। यद्यप्यङ्गानि भूयांसि पूर्वरङ्गस्य नाटके । तथाप्यवश्यं कर्त्तव्यानान्दीविघ्नप्रशान्तये ॥ देवद्विजनृपादीनामाशीर्वादपरायणा । नन्दन्तिदेवतायस्मात्तस्मान्नान्दीप्रकीर्त्तिता ॥ अन्यच्च । देवद्विजनृपादीना माशीर्वचनपूर्विका । नान्दी कार्य्यावुधै र्यत्नान्नमस्कारेणसंयुता ॥ गङ्गानागपतिः सोमः सुधानन्दाजयाशिषः । एभिर्नामपदैः कार्य्या नान्दी धाराभिरङ्किता ॥ प्रशस्तपदविन्यासा चन्द्रसङ्कीर्त्तनान्विता आशीर्वादपरानान्दीयोज्ज्येयं मङ्गलात्मिका ॥ काचिद्दशपदानान्दी काचिदष्टपदा तथा । सूत्रधारः पठेन्नान्दीं मध्यम स्वरमाश्रितः ॥ इतिमालतीमाधवटीका ॥

नान्दीकः । पुं । तोरणस्तम्भे ॥

नान्दीकरः । त्रि । नान्दीवादिनि । नान्दीपाठकारिणि ॥ नान्दी माशीर्नमस्क्रियादिरूपं मङ्गलं करोति वदति । दिवाविभेतिटः ॥ भेरी प्राया नान्दीतद्वादनशीले इति केचित् ॥ अथवदिकृञौवादनार्थौ विश्वाहुः ॥

नान्दीपटः । पुं । वीनाहे । कूपादीनां मुखवन्धने ॥ इतिहेमचन्द्रः ॥

नान्दीमुखः । पुं । कूपादिमुखवन्धने । नान्दीपटे ॥ वृद्धिश्राद्भुजि पितृगणे ॥ यथा । नान्दीमुखं पितृगणं पूजयेत् प्रयतो गृहीति विष्णु पुराणम् । सचगणः पित्रादित्रिकम् मातामहादित्रिकञ्चेति ॥ न । वृद्धिश्राद्धे ॥

नान्दीमुखी । स्त्री । सामगेतरवृद्धिश्राद्भुङ्मातृगणे ॥ शर्करीछन्दोभेदे ॥ स्वरभिद्रियद्दिनौतौ चनान्दीमुखी गौ । यथा । सरसखगकुलालापनान्दीमुखीयं लहरिभुजलताचारुफेनस्मितश्रीः । मुरहरकलयासत्तिमासाद्यकिन्त प्रमुदितहृदया भानुजान्दत्यतीह ॥

नान्दीवादी । त्रि । नान्दीश्लोकपाठकारिणि । नान्दीकरे ॥ नान्दीवदनशी

ल: । सुपीतिवद्दर्शिनि: ॥ नाटकादौ मङ्गलार्थं भेर्यादिवादके ॥

नापित: । पुं । नाई इतिख्याते वर्णसङ्करजातिविशेषे । अन्तावसायिनि । क्षुरिणि । पट्टिकाख्यांकुबेरिणी जाते । इति प० प० ॥ शूद्रायां क्षत्रिया ज्जातोयमिति विवादार्णवसेतु: ॥

नापितशालिका । स्त्री । नापितशालायाम् । खरकुट्याम् ॥

नाभक: । पुं । वनतिक्ते ॥

नाभाग: । पुं । नभगात्मजे ॥ नभगस्यापत्यम् । अण् ॥

नाभि: । पुं । मुख्यनृपे । अग्नीधापत्ये ॥ चक्रमध्ये । रथचक्रस्थपिण्ड्याम् ॥ क्षत्रिये ॥ स्त्री । मृगमदे ॥ पुं । स्त्री । प्राण्यङ्गविशेषे । उदरावर्त्ते । तुन्दकूप्याम् ॥ सूंडी इति भाषा ॥ त्रि । प्रधाने । मुख्ये ॥ नह्यन्ते अराअच । रुह० । नहोभश्चेति इञ् ॥ नभ्यते अच्यते नभ्यते ऽनया ऽस्यां वा । रुभ० । इञजादिभ्य: ॥ यद्वानाभयति । स्वार्थण्यन्ताद्दच्इ: ॥

नाभिकण्टक: । पुं । गर्भखण्डे ॥ आवर्त्ते ॥ इतिशब्दरत्नावली ॥

नाभिका । स्त्री । कटभीवृक्षे ॥

नाभिगुडक: । पुं । गर्भखण्डे । गोखण्डे । फूलीसूंडी इतिटूंडी इतिचभाषा ॥

नाभिगोलक: । पुं । स्फीतनाभौ । नाभिकण्टके । गर्भखण्डे ॥ नाभेर्गोलक: ॥

नाभिज: । पुं । ब्रह्मणि । कमलासने ॥

नाभिजन्मा । पुं । ब्रह्मणि । स्रष्टरि । विधातरि ॥ नाभौजन्मास्य ॥

नाभिनाला । स्त्री । अमरायाम् । नाभिसम्बन्धिन्यां नाड्याम् ॥

नाभिभू: । पुं । अब्जयोनौ । ब्रह्मणि ॥

नाभिवर्ष: । पुं । भारतवर्षे ॥

नाभी । स्त्री । नाभौ ॥ मृगमदे ॥ कृदिकारादितिङीष् ॥

नाभीलम् । न । नार्या:वङ्क्षणे ॥ नाभिगाम्भीर्ये ॥ कृच्छ्रे ॥ गर्भखण्डे । नाभिगोलके ॥

नाभ्यम् । त्रि । नाभिहिते ॥ नाभये हितम् । शरीरावयवाद्यत् । नाभिनभञ्चेतिनाभेर्नभादेशस्तु न भवति । तत्सगवादियत्सन्नियोगशिष्टत्वेन रथनाभावेवप्रवृत्ते: ॥ नाभिसम्बन्धिनि ॥

नाम । अ । कोपे ॥ अभ्युपगमे ॥ विस्मये ॥ स्मरणे ॥ सम्भाव्ये । सम्भावनायाम् ॥ कुत्सायाम् ॥ प्राकाश्ये ॥ विकल्पे ॥ अलीके ॥ इत्येतदर्थे ॥ नामयति नाम्यते वा । णसप्रह्वत्वे । अन्येभ्योपीतिडः ॥

नामकरणम् । न । संस्कारविशेषे ॥

नाम्नः करणम् । तच्चनाम शर्मवर्मा द्युपपदान्तत्वेनकर्त्तव्यम् । यथा । त तस्तु नामकुर्वीतपितैवदशमेऽहनि । देवपूर्वं नराख्यंहिशर्मवर्मादिसंयुतम् ॥ शर्म्मेतिब्राह्मणस्योक्तं वर्म्मेति चत्रसंश्रयम् । गुप्तदासात्मकंनामप्रशस्तंवैश्यशूद्रयोः ॥ नार्थहीनंनचाशस्तंनापशब्दयुतंतथा । नामाङ्गल्यं जुगुप्स्यंवानामकुर्यात्समाचरम् ॥ नातिदीर्घंनातिह्रस्वं नातिगुर्वचरान्वितम् । सुखोच्चार्यांचरंनामकुर्याद्यत्प्रवणाचरम् ॥ प्रवणाचरंलघूत्तराचरम् । इतिविष्णुपुराणम् ॥ *॥ अयुग्मदान्तंतथास्त्रीणा मितिगोभिलः । अयुग्मक मयुगचरम् । दान्तं दकारान्तम् । यथा । यशोदाधनदेत्यादि ॥ *॥ अथमहाभाष्यंयथा । दशम्यां पुत्रस्य । याज्ञिकाःपठन्ति दशम्युत्तरकालं पुत्रस्य जातस्य नाम विदध्यात् घोषवदाद्यन्तरन्तस्थमवद्धं त्रिपुरुषानूकमनरिप्रतिष्ठितम् तद्धिप्रतिष्ठिततमं भवति द्व्यचरं चतुरचरंवा नाम कृतं कुर्य्यान्न तद्धितमिति । नवान्तरेण व्याकरणं कृतस्तद्धिता दाशक्यादिज्ञातु मिति॥ दशम्या उत्तरइतिपञ्चमीतियोगविभागात् समासः । ततःकालशब्देनवहुव्रीहिः । क्रियाविशेषणंचैतत् । दशदिनान्याशौचं भवतीतिदशम्युत्तरकालमित्युक्तम् । यदपिगृह्यकाराः पठन्ति दशम्यां पुत्रस्येति तैरपि दशम्यामितिसामीपिकमधिकरणं व्याख्येयम् । घोषवन्तो ये वर्णाःशिचायांप्रदर्शितास्तदादि । अन्तरन्तस्थमिति । मध्ये यरलवा यस्यतदित्यर्थः । त्रिपुरुषानूकमिति । नामकरणे येधिकारीपितातस्य ये त्रयःपुरुषास्ताननु कायत्यभिधत्तइतित्रिपुरुषानूकम् अन्येषामपिदृश्यतइतिदीर्घइतिकैयटः॥ तच्च श्रीपूर्वकर्त्तव्यम् । देवं गुरुं गुरुस्थानं चेत्रं चेत्राधिदेवताम् । सिद्धंसिद्धाधिकारांश्चश्रीपूर्वंसमुदीरयेत् ॥ स्वर्गकामित्यादिनासिद्धोऽधिकारोयेषां नराणामित्यनेनजीवतांश्रीशब्दादित्वंनाम्नो न सृतानांतयेतिशिष्टाचारः ॥



नामद्वादशी । स्त्री । व्रतविशेषे ॥

नामधेयम् । न । नामनि ॥ नामैव भागरूपनामभ्योधेयः इतिस्वार्थेधेयः ॥ नामधेयानाञ्च विधेयार्थपरिच्छेदकतयार्थवत्त्वम् । तथाहि । उद्भिदायजेतपशुकामइत्यत्रोद्भि च्छब्दोयागनामधेयम् । तेनचविधेयार्थपरिच्छेदःक्रियते ॥

नाम । न । आकाशादिदेहान्ते संज्ञा विशेषे । सत्त्वप्रधाने नामधेये । वाचकशब्दे । अख्यायाम् । आह्वायाम् । पर्य्याये ॥ नम्यते ऽभिधीयते ऽर्थोनेन । णम० । नामन्सीमन्निति निपातितः ॥ यद्वा । म्नायते । अभ्यस्यते । म्ना० । नामन्नित्यादिनानिपातनान्म लोपः ॥ न नामग्रहणं कुर्य्यात्कृपणस्य गुरोस्तथा । भार्य्यायाश्चभिशस्तस्यजनकस्यविशेषतः ॥ आत्मनाम गुरोर्नाम नामातिकृपणस्यच । श्रेयस्कामो नगृह्णीयाज्ज्येष्ठापत्यकलत्रयोः ॥ नमत्याख्यातार्थं प्रतिविशेषणीभवतीतियुत्पत्त्यास्वादिविभक्त्यर्हे शब्दे ॥ यथा । उणाद्यन्तं कृदन्तञ्च तद्धितान्तं समासजम् । शब्दानुकरणञ्चैवनाम पञ्चविधंस्मृतम् ॥ सर्वाण्येतानि नामानि परस्यब्रह्मणोनघ । सर्वान् कामानवाप्नोतिसमाराध्यजगद्गुरुम् ॥ तन्मयत्त्वेनगोविन्दमित्येतद्वाल्भ्यनान्यथा । तन्मयोवाञ्छितान्कामान्यदवाप्नोतिमानवः ॥ इतिविष्णुधर्मवचनम् ॥ चक्रायुधस्यनामानि सदासर्वत्रकीर्त्तयेत् । नाशौचंकीर्त्तनेतस्यतपवित्रकरोयतइति पुराणम् ॥भगवन् सर्वधर्मज्ञसर्वशास्त्रविशारद । कथंधर्मवहुलेनराणां कागतिर्भवेत् । यद्यस्तितदुपायोहि दयया तं वदस्वमे । इतिजन्मेजयप्रश्नेव्यास उवाच । एक एव महाराज तचोपायोस्तिनापरः । सर्वदोषनिरासार्थं ध्यायेद्देवीपदाम्बुजम् ॥ न सन्त्यघानितावन्ति यावती शक्तिरस्ति हि । नाम्निदेव्याः पापदाहेतस्मात्भीतिःकुतोनृप ॥ अवशेनापियन्नाममनीलयोच्चारितं यदि । किंकं ददातितज्ज्ञातुं समर्थानहरादयः ॥ प्रायश्चित्तन्तुपापानां श्रीदेवीनाम संस्मृतिः । तस्मात्कलिभयाद्राजनपुण्यक्षेत्रेवसन्नरः ॥ निरन्तरं पराम्बाया नामसंस्मरणं चरेत् । छित्त्वाभित्त्वाचभूतानि हत्वासर्वमिदंजगत् ॥ देवीं नमतिभक्त्यायोन स पापैर्विलिप्यते । रहस्यंसर्वशास्त्राणांमयाराजन्नुदीरितम् ॥ विमृश्यैतदशेषेण भजदेवीपदाम्बुजम् । अजपां नामगायत्रीं जपन्ति निखिलाजनाः ॥ महिमानंनजानन्तिमायायावैभवंमहत् । गायत्रींब्राह्मणाःसर्वेजपन्तिहृदयान्तरे ॥ महिमानंनजानन्तिमायायावैभवं महत् ॥ एतत्सर्वं समाख्यातं यत् पृष्टन्त्वयानृप । युगधर्मव्यवस्थायां किंभूयःश्रोतुमिच्छसि ॥ इतिश्रीदेवीभागवतेमहापुराणे६स्क

